**दिनाङ्कः 05-12-2020**

**प्रातः - 06: 55**

**मुख्य-वार्ताः**

- प्रधानमन्त्रिणा नरेन्द्र मोदिना सविश्वासं प्रतिपादितम् अस्ति यत् आगामि कतिपयैः सप्ताहैः भारतं कोरोना महामार्याः सूच्यौषधं प्राप्स्यति।

- प्रधानमन्त्री नरेन्द्रमोदी प्रावोचत् यत् सर्वकारः देशे विज्ञानस्य प्रौद्योगिकेश्च शिक्षासुदृढीकरणाय कृतसंकल्पो विद्यते |
- केन्द्रसर्वकारस्य कृषकाणां च मध्ये वार्तायाः पञ्चमं चरणं अद्य दिल्ल्याम् आयोक्ष्यते।
- भारतेन कोरोना-प्रकोप-नियमने प्रशंसार्हा सफलता अधिगतास्ति स्वस्थतामानमपि संवर्ध्य चतुर्णवति-दशमलव-द्वि-शून्य परिमितम् संवृत्तम्।
- अपि च,
- ह्यः कैनबरायां क्रीडितायां विंशतिः प्रतिविंशति क्रिकेट स्पर्धायां भारतेन ऑस्ट्रेलियादलम् एकादशधावनांकैः पराजितम्।

**कोविड ओपनिंग**

कोरोणामहामार्या: विरुद्धं देश: ऐक्यभावनया युध्यति। भवन्तोऽपि अस्माभि: सह सुरक्षाया: उपायत्रयस्य संकल्पं स्वीकुर्वन्तु -

**मुखावरंक सन्धारयन्तु**
**सामाजिकदौर्यं परिपालयन्तु,**
**पाणिपादं च यथासमयं प्रक्षालयन्तु।**

**प्रधानमन्त्री**

प्रधानमन्त्रिणा नरेन्द्र मोदिना प्रतिपादितम् अस्ति यत् आगामि कतिपयैः सप्ताहैः भारतं कोरोना महामार्याः सूच्यौषधं प्राप्स्यति। श्रीमोदी न्यागादीत् यत् वैज्ञानिकाः शीघ्रं सूच्यौषधविनिर्माणं प्रति विश्वस्ताः सन्ति।

प्रधानमन्त्री नरेन्द्रमोदी प्रत्यपादयत् यत् कोरोना महामार्याः समुचित-उपचारार्थं जगत् भारतस्य साहाय्यं समीहते। यतोहि अल्पमूल्ये कोरोणा सूच्यौषधानां आपूर्तिः भारतेनैव सम्भवा।

एतेन महामार्याः रक्षणं भविता। असौ ह्यः संक्रमणम् अवलम्ब्य आयोजितं सर्वदलीयम् उपवेशनं सम्बोधयति स्म। अन्तर्जाल-माध्यमेन मेलनस्य अध्यक्षतां कुर्वन् श्रीमोदी अब्रवीत् यत् वैज्ञानिकाः सबलं विश्वस्ताः सन्ति यत् ते आगामिषु सप्ताहेषु कोरोनोपचाराय सूच्यौषधस्य विकासं करिष्यन्ति। प्रधानमन्त्रिणा विज्ञापितं यत् महामारि-रोधाय निमितानि अष्ट-सूच्यौषधानि विकासपरीक्षणस्य विभिन्नेषु चरणेषु सन्ति। अनुसन्धातृ-वैज्ञानिकैः सूच्यौषधानां अनुमति-प्राप्तेरनन्तरं सूच्यौषधीकरण-कार्यक्रमारम्भो विधास्यते। तावत् सुरक्षोपायानाम् अनुपालनम् अस्ति महदावश्यकम्। अवधेयास्पदं विद्यते यत् महामार्याः स्थितिं परिचर्चयितुं आकारितं सर्वदलीयम् एतदुपवेशनं होरात्रयं यावत् प्रचलितम्। यत्र लोकसभा-राज्यसभयोः विभिन्नदलानां सदनस्य नेतारः सहभागिताम् आवहन्। केन्द्रीयोमन्त्री अमितशाहः, राजनाथसिंहः, हर्षवर्धनश्च मन्त्रणायां समुपस्थिताः अवर्तन्त। कांग्रेस् नेतारं अधीर-रंजन चौधरीं, गुलाम-नबी-आज़ाद समेत्य नैकेषां दलानां नेतारः दृश्य-श्रव्य-प्रणाल्या अत्रोपवेशने प्रतिभागिताम् आवहन्।

**प्रधानमंत्री-आईआईटी**

प्रधानमन्त्री नरेन्द्रमोदी प्रावोचत् यत् सर्वकारः देशे विज्ञानस्य प्रौद्योगिकेश्च शिक्षासुदृढीकरणाय कृतसंकल्पो विद्यते | प्रधानमन्त्री आइ आइ टी विंशतिः विंशतिः वैश्विकसंमेलने भाषमाणः उक्तवक्तव्यं प्राकाशयत् | प्रधनमन्त्रिणोक्तं यत् भारतम् अस्य परिष्कार-प्रदर्शन-परिवर्तनानि चेति एतेषां सिद्धान्तानाम् उपरि कार्यं करोति |

## केंद्र-कृषकाः

केन्द्रसर्वकारस्य कृषकाणां च मध्ये वार्तायाः पञ्चमं चरणं अद्य दिल्ल्याम् आयोक्ष्यते। अवधेयास्पदं वर्तते यत् चतुर्थचरणात्मिका वार्ता गुरुवासरे आयोजिता आसीत्। यस्यां कृषकाणां चत्वारिंशत् संघटनानां प्रतिनिधयः कृषि मन्त्रिणा नरेन्द्र सिंह तोमरेण रेलमंत्रिणा पीयूष गोयलेन, राज्य वित्तीय मन्त्रिणां सोमप्रकाशेण सह च सम्मेलनं कृतवन्तः। कृषि मन्त्रिणा निगदितं यत् सर्वकारः सर्वदा कृषकाणां कल्याणाय उन्नत्यै च प्रयतते।

## कोरोना

भारतेन कोरोना-प्रकोप-नियमने प्रशंसार्हा सफलता अधिगतास्ति। इदानीं यावत् नवतिलक्षमिताः जनाः स्वस्था अभूवन्। स्वस्थतामानमपि संवर्ध्य चतुर्णवति-दशमलव-द्वि-शून्य परिमितम् संवृत्तम। साम्प्रतं देशे स्वस्थीभूतानां संख्या, उपचाराधीनानाम् अपेक्षया द्वाविंश-गुणिता वर्तते। विगते अहोरात्रे संक्रमणात् मुक्तिमावप्तवतां संख्या प्रायः त्रि-चत्वारिंशत्-सहस्रमिता संजाता। तत्रैव भूयोपि पञ्चशदाधिक-षट्त्रिंशत् सहस्राणि विषाणोः अभिनवानि प्रकरणानि अपि पुष्टिं गतानि। स्वास्थ्य-मन्त्रालयो ब्रूते यत् कोरोनातः संजाते मृत्युमाने अपि अपचितिः दरीदृष्टा। मृत्युप्रतिशतता इदानीं एक दशमलव-चतुः पंच-मिता अस्ति। मन्त्रालयेन ज्ञापितं यत् विगते अहोरात्रे चत्वारिंशदधिक-पञ्चशतं संक्रमणग्रस्ताः दिवं प्रयाताः।

## जम्मूकश्मीरः

केन्द्रशासिते प्रदेशे जम्मूकश्मीरे डीडीसी इति जनपद-विकास-परिषदः तृतीयचाक्रिकं मतदानं ह्यः सम्पन्नम्। अस्मिन् चरणे त्रयस्त्रिंशत्-निर्वाचन-क्षेत्रेभ्यः मतदानानि समनुष्ठितानि। एतेषु षोडश कश्मीरोपत्यकायाम् अथ सप्तदश निर्वाचन क्षेत्राणि जम्मूक्षेत्रस्य आसन्। पञ्चाधिक त्रि-शतं प्रत्याशिनः स्पर्धन्ते स्म। प्रदेशे आहत्य षट्-चत्वारिंशदुत्तर द्वि-सहस्रं मतदानकेन्द्राणि सन्ति अवस्थापितानि।

## आरबीआई

भारतीय-रिजर्व-बैंक इत्यस्य अध्यक्षः शक्तिकान्तदासः अवदत् यत् मौद्रिक-नीति-समितिः वित्तकोषाणां नीतिगत-मानं चतुःप्रतिशतम् स्तरे एव स्थापयिष्यति इति सर्वसम्मत्या विनिर्णितम्। श्रीमता दासेनोक्तं यत् मौद्रिक-नीतिसमितेः विचार आसीत् यत् मुद्रास्फीतेः साम्प्रतं उच्चस्तरे अवस्थानस्य सम्भावना अस्ति। यद्यपि खरीफ-सस्यानां पर्याप्त-उत्पादनस्य सम्भावनाः आलक्ष्य अल्पकाले प्रयोगहीनावस्थां प्राप्यमाणानां वस्तूनां मूल्ये शीततौ अपचितिः सम्भाव्यते। असौ सबलं प्रत्यपादयत् यत् रिज़र्व बैंक इति वित्तीयक्षेत्रस्य स्थिरतां यथावस्थं स्थापयितुं सर्वथा अस्ति वचनबद्धम्। एतदर्थम् असौ यथाशक्ति प्रयतिष्यते।

## क्रिकेट

ह्यः कैनबरायां क्रीडितायां विंशतिः प्रतिविंशतिः क्रिकेट-स्पर्धायां भारतेन ऑस्ट्रेलियादलम् एकादशधावनांकैः पराजितम्। अग्रिमा स्पर्धा षड्तारिकायां भविता।

।। इति वार्ताः ।।